कालबुद्धिः कालसृष्टिः कारागृहविमोचिनी ॥११७॥
कादिविद्या कादिमाता कादिस्था कादिसुन्दरी ।
काशी कांची च कांचीशा काशीशवरदायिनी ॥११८॥
क्रींबीजा चैव क्रींबीजा हृदयायनमस्मृता ।
काम्या काम्यगतिःकाम्यसिद्धिदात्री च कामभूः।११९।
कामाख्या कामरूपा च कामचापविमोचिनी ।
कामदेवकलारामा कामदेवकलालया ॥१२०॥
कामरात्रिः कामदात्री कान्ताराचलवासिनी ।
कामरूपा कालगतिः कामयोगपरायणा ॥१२१॥
कामसम्मर्दनरता कामगेहविकाशिनी ।
कालभैरवभार्य्या च कालभैरवकामिनी ॥१२२॥
कालभैरवयोगस्था कालभैरवभोगदा ।
कामधेनुः कामदोग्ध्री काममाता च कान्तिदा ।१२३।
कामुका कामुकाराध्या कामुकानन्दवर्द्धिनी ।
कार्त्तवीर्य्या कार्त्तिकेया कार्त्तिकेयप्रपूजिता ॥१२४॥
कार्या कारणदा-कार्य्यकारिणी कारणान्तरा ।
कांतिगम्या कांतिमयी कात्या कात्यायनी च का ।१२५।
कामसारा च काश्मीरा काश्मीराचारतत्परा ।

कामरूपाचाररता कामरूपप्रियम्बदा ॥१२६॥
कामरूपाचारसिद्धिः कामरूपमनोमयी ।
कार्त्तिकी कार्त्तिकाराध्या कांचनारप्रसूनभूः ॥१२७॥
कांचनारप्रसूनाभा कांचनारप्रपूजिता ।
कांचरूपा कांचभूमिः कांस्यपात्रप्रभोजिनी ॥१२८॥
कांस्यध्वनिमयी काम-सुन्दरीकामचुम्बना ।
काशपुष्पप्रतीकाशा कामद्रुमसमागमा ॥१२९॥
कामपुष्पा कामभूमिः कामपूज्या च कामदा ।
कामदेहा कामगेहा कामवीजपरायणा ॥१३०॥
कामध्वजसमारूढा कामध्वजसमास्थिता ।
काश्यपी काश्यपाराध्या काश्यपानन्ददायिनी ॥१३१॥
कालिन्दीजलसङ्काशा कालिन्दीजलपूजिता ।
कादेवपूजानिरता कादेवपरमार्थदा ॥१३२॥
कार्म्मणा कार्म्मणाकारा कामकार्म्मणकारिणी ।
कार्म्मणत्रोटनकरी कालिनीकारणाह्वया ॥१३३॥
काव्यामृता च कालिङ्गा कालिङ्गमर्द्दनोद्यता ।
कालागुरुविभूषाढ्या कालागुरुविभूतिदा ॥१३४॥
कालागुरुसुगन्धा च कालागुरुप्रतर्पणा ।

कावेरीनीरसम्प्रोता कावेरीतीरवासिनी ॥१३५॥
कालचक्रभ्रमाकारा कालचक्रनिवासिनी ।
कानना काननाधारा कारुः कारुणिकामयी ॥१३६॥
काम्पिल्यवासिनी काष्ठा कामपत्नी च कामभूः ।
कादम्बरीपानरता तथा कादम्बरीकला ॥१३७॥
काकवन्ध्या च कामेशी कामराजप्रपूजिता ।
कामराजेश्वरीविद्या कामकौतुकसुन्दरी ॥१३८॥
काम्बोजजा काञ्चिनदा कांस्यकाञ्चनकारिणी ।
कांचनाद्रिसमाकारा काञ्चनाद्रिप्रदानदा ॥१३ ॥
कामकीर्त्तिः कामकेशी कारिका कान्तराश्रया ।
कामभेदी च कामार्ति-नाशिनी कामभूमिका ॥१४०॥
कालानिर्णाशिनी काव्यवनिता कामरूपिणी ।
कायस्था कामसन्दीप्तिः काव्यदा कालसुन्दरी ।१४१।
कामेशी कारणवरा कामेशीपूजनोद्यता ।
काञ्ची-नूपुरभूषाढ्या कुङ्कुमाभरणान्विता ॥१४२॥
कालचक्रा कालगतिः कालचक्रमनोभवा ।
कुन्दमध्या कुन्दपुष्पा कुन्दपुष्पप्रियाकुजा ॥१४३॥
कुजमाता कुजाराध्या कुठारवरधारिणी ।

कुञ्जरस्था कुशरता कुशेशयविलोचना ॥१४४॥
कुनठी कुररी कुद्रा कुरङ्गी कुटजाश्रया ।
कुम्भीनस-विभूषा च कुम्भीनस-वधोद्यता ॥१४५॥
कुम्भकर्णमनोल्लासा कुलचूडामणिः कुला ।
कुलालगृहकन्या च कुलचूडामणिप्रिया ॥१४६॥
कुलपूज्या कुलाराध्या कुलपूजापरायणा ।
कुलभूषा तथा कुक्षिः कुररीगणसेविता ॥१४७॥
कुलपुष्पा कुलरता कुलपुष्पपरायणा ।
कुलवस्त्रा कुलाराध्या कुलकुण्डसमप्रभा ॥१४८॥
कुलकुण्डसमोल्लासा कुण्डपुष्पपरायणा ।
कुण्डपुष्पप्रसन्नास्या कुण्डगोलोद्भवात्मिका॥१४९॥
कुण्डगोलोद्भवाधारा कुण्डगोलमयी कुहूः ।
कुण्डगोलप्रियप्राणा कुण्डगोलप्रपूजिता ॥१५०॥
कुण्डगोलमनोल्लासा कुण्डगोलबलप्रदा ।
कुण्डदेवरता क्रुद्धा कुलसिद्धिकरापरा ॥१५१॥
कुलकुण्डसमाकारा कुलकुण्डसमानभूः ।
कुण्डसिद्धिः कुण्डऋद्धिः कुमारीपूजनोद्यता १५२।
कुमारीपूजकप्राणा कुमारीपूजकालया ।

कुमारीकामसन्तुष्टा कुमारीपूजकोत्सुका ॥१५३॥
कुमारीव्रतसन्तुष्टा कुमारीरूपधारिणी ।
कुमारीभोजनप्रीता कुमारी च कुमारदा ॥१५४॥
कुमारमाता कुलदा कुलयोनिः कुलेश्वरी ।
कुललिङ्गा कुलानन्दा कुलरम्या कुतर्कधृक् ॥१५५।
कुन्ती च कुलकान्ता च कुलमार्ग परायणा ।
कुल्ला च कुरुकुल्ला च कुल्लुका कुलकामदा ॥१५६॥
कुलिशाङ्गी कुब्जिका च कुब्जिकानन्दवर्द्धिनी ।
कुलीना कुञ्जरगतिः कुञ्जरेश्वरगामिनी ॥१५७॥
कुलपाली कुलवती तथैव कुलदीपिका ।
कुलयोगेश्वरी कुण्डा कुंकुमारुणविग्रहा ॥१५८॥
कुंकुमानन्दसन्तोषा कुंकुमार्णववासिनी ।
कुसुमा कुसुमप्रीता कुलभूः कुलसुन्दरी ॥१५९॥
कुमुद्वती कुमुदिनी कुशला कुलटालया ।
कुलटालयमध्यस्था कुलटासङ्गतोषिता ॥१६०॥
कुलटाभवनोद्युक्ता कुशावर्त्ता कुलार्णवा ।
कुलार्णवाचाररता कुण्डली कुण्डलाकृतिः ॥१६१॥
कुमती च कुलश्रेष्ठा कुलचक्रपरायणा ।

कूटस्था कूटदृष्टिश्च कुन्तला कुन्तलाकृतिः ॥१६२॥
कुशलाकृतिरूपा च कूर्च्चबीजधरा च कूः ।
कंकुंकुंकुंशब्दरता क्रूंक्रूंक्रूंक्रूम्परायणा ॥१६३॥
कुंकुंकुंशब्दनिलया कुक्कुरालयवासिनी ।
कुक्कुरासङ्गसंयुक्ता कुक्कुरानन्तविग्रहा ॥१६४॥
कूर्च्चारम्भा कूर्च्चबीजा कूर्च्चजापपरायणा ।
कुचस्पर्शनसन्तुष्टा कुचालिङ्गनहर्षदा ॥१६५॥
कुगतिघ्नी कुबेरार्च्या कुचभूः कुलनायिका ।
कुगायना कुचधरा कुमाता कुंददन्तिनी ॥१६६॥
कुगेया कुहराभासा कुगेया कुघ्नदारिका ।
कीर्त्तिःकिरातिनीक्लिन्नाकिन्नराकिन्नरीक्रिया १६७
क्रींङ्कारा क्रोङ्जपासक्ता क्रींहूंस्त्रींमंत्ररूपिणी ।
किर्म्मीरितदृशापागी किशोरी च किरीटिनी ॥१६८॥
कीटभाषा कीटयोनिः कीटमाता च कीटदा ।
किंशुका कीरभाषा च क्रियासारा क्रियावती ॥१६९॥
कींकींशब्दपरा क्लींक्लींक्लूंक्लैंक्लौंमंत्ररूपिणी ।
कांकींकूंकैंस्वरूपा च कःफट्मन्त्रस्वरूपिणी ॥१७०॥
केतकीभूषणानन्दा केतकीभरणान्विता ।

कैकदा केशिनी केशी केशीसूदनतत्परा ॥१७१॥
केशरूपा केशमुक्ता कैकेयी कौशिकी तथा।
कैरवा कैरवाह्लादा केशरा केतुरूपिणी ॥१७२॥
केशवाराध्यहृदया केशवासक्तमानसा।
क्लैब्यविनाशिनी क्लैञ्च क्लैंबीजजपतोषिता १७३
कौशल्या कोशलाक्षी च कोशाच कमला तथा।
कोलापुरनिवासा च कोलासुरविनाशिनो ॥१७४॥
कोटिरूपा कोटिरता क्रोधिनी क्रोधरूपिणी।
केका च कोकिला कोटिः कोटिमन्त्रपरायणा ॥१७५॥
कोट्यनन्तमन्त्रयुता कैरूपा केरलाश्रया।
केरलाचारनिपुणा केरलेन्द्रगृहस्थिता ॥१७६॥
केदाराश्रमसंस्था च केदारेश्वरपूजिता।
क्रोधरूपा क्रोधपदा क्रोधमाता च कौशिकी ॥१७७॥
कोदण्डधारिणी क्रौंचा कौशिक्या कौलमार्गगा।
कौलिनी कौलिकाराध्या कौलिकागारवासिनी।१७८
कौतुकी कौमुदी कौला कुमारी कौरवार्चिता।
कौण्डिन्या कौशिकी क्रोधा ज्वालाभासुररूपिणी १७९
कोटिकालानलज्वाला कोटिमार्त्तण्डविग्रहा।

कृत्तिका कृष्णवर्णा च कृष्णकृत्या क्रियातुरा ॥१८०॥
कृशाङ्गी कृतकृत्या च क्रः फट्स्वाहास्वरूपिणी ।
क्रौंक्रौंहूँफट्मन्त्रवर्णा क्रींह्रींहूं फट्स्वरूपिणी ॥१८१॥
क्रींक्रींह्रींह्रीं तथा हूंहूँफट्स्वाहामन्त्ररूपिणी ।
इति श्रीसर्वसाम्राज्यमेधा-नामसहस्रकम् ॥१८२॥



## कर्पूरस्तोत्र पाठके पहले आवश्यक विनियोगादि

ओं अस्य कर्पूरस्तवराजस्य महाकाल ऋषिः, गायत्री छन्दः, श्रीदक्षिणाकालिका देवता, हलो बीजानि, स्वराः शक्तयः, अव्यक्तं कीलकं, श्रीदक्षिणाकालिकादेवताप्रसादसिद्ध्यर्थं अमुककामनासिद्ध्ये जपे विनियोगः।

ऋष्यादिन्यासः

महाकालऋषये नमः शिरसि—अङ्गुष्ठसे
गायत्रीछन्दसे नमो मुखे—मध्यमा-अनामिका से
श्रीदक्षिणाकालिकादेवताय नमो हृदि—तर्जनी-मध्यमा से
हल्भ्यो बीजेभ्यो नमो गुह्ये—अङ्गुष्ठ-अनामिका से
स्वरेभ्यः शक्तिभ्यो नमः पादयोः—मध्यमा से
अव्यक्ताय कीलकाय नमः सर्वाङ्गे—दोनों हस्ततलों से

करन्यास :—

क्रां अङ्गुष्ठाभ्यां नमः, क्रीं तर्जनीभ्यां स्वाहा, क्रूं मध्यमाभ्यां वषट्, क्रैं अनामिकाभ्यां हुम्, क्रौं कनिष्ठाभ्यां वौषट्, क्रः करतलकरपृष्ठाभ्यां फट्।

अङ्गन्यास :—

क्रां हृदयाय नमः, क्रीं शिरसे स्वाहा, क्रूं शिखायै वषट्, क्रैं कवचाय हुम्, क्रौं नेत्रत्रयाय वौषट्, क्रः अस्त्राय फट्।

# ताराराधना

ध्यानम् —

प्रत्यालीढपदार्पितां घ्रिशवहृद्घोराट्टहासापरा ।
खड्गे-न्दीवरकर्त्रिखर्परभुजा हुङ्कारबीजोद्भवा ॥
खर्वा नीलविशालपिङ्गलजटाजूटैकनागैर्युता ।
जाड्यं न्यस्य कपालकर्तृ जगतां हन्त्युग्रतारा स्वयम् ॥

मन्त्र :—

ओं ह्रीं स्त्रीं हूं फट्

## श्रीताराष्टकम्

श्रीभैरव उवाच

ॐ मातर्नीलसरस्वति प्रणमतां सौभाग्यसम्पत्प्रदे ।
प्रत्यालीढपदस्थिते शिवहृदि स्मेराननाम्भोरुहे ॥
फुल्लेन्दीवरलोचनत्रययुते कर्त्रीकपालोत्पले ।
खड्गञ्चादधती त्वमेव शरणं त्वामीश्वरीमाश्रये ॥
वाचामीश्वरि भक्तकल्पलतिके सर्वार्थसिद्धीश्वरि ।
गद्यप्राकृतपद्यजातरचनासर्वज्ञसिद्धिप्रदे ॥

नीलेन्दीवरलोचनत्रययुते कारुण्यवारां निधे ।
सौभाग्यामृतवर्षणेन कृपया सिंच त्वमस्मादृशम् ॥
खर्वे गर्वसमूहपूरिततनो सर्पादिवेशोज्ज्वले ।
व्याघ्रत्वक्परिवीतसुन्दरकटिव्याधूतघण्टाङ्किते ॥
सद्यःकृत्तगलद्रजःपरिमिलन्मुण्डद्वयीमूर्द्धज—
ग्रन्थिश्रेणिनृमुण्डदामललिते भीमे भयं नाशय ॥
मायानङ्गविकाररूपललनाविन्द्वर्धचन्द्रात्मिके ।
हूँ फट्कारमयि त्वमेव शरणं मन्त्रात्मिके मादृशः ॥
मूर्तिस्ते जननि त्रिधामघटिता स्थूलातिसूक्ष्मा परा ।
वेदानां नहि गोचरा कथमपि प्राप्तां नु तामाश्रये ॥
त्वत्पादाम्बुजसेवया सुकृतिनो गच्छन्ति सायुज्यतां ।
तस्य श्रीपरमेश्वरत्रिनयनब्रह्मादिसाम्यात्मनः ॥
संसाराम्बुधिमज्जनेऽपटुतनूम् देवेन्द्रमुख्यान् सुरान् ।
मातस्त्वत्पदसेवने हि विमुखान् किं मन्दधीः सेवते ॥
मातस्त्वत्पदपङ्कजद्वयरजोमुद्राङ्ककोटीरिण—
स्ते देवा जयसंगरे विजयिनो निःशंकमंके गताः ॥
देवोऽहं भुवने न मे सम इति स्पर्द्धां वहन्तः परा—
स्तत्तुल्यान्नियतं तथाऽप्यमीभिरमी नाशं व्रजन्ति स्वयम्

त्वन्नामस्मरणात्पलायनपरा द्रष्टुं च शक्ता न ते ।
भूतप्रेतपिशाचराक्षसगणा यक्षाश्च नागाधिपाः ॥
दैत्या दानवपुङ्गवाश्च खचरा व्याघ्रादिका जन्तवो ।
डाकिन्यः कुपितान्तकश्च मनुजो मातः क्षणं भूतले ॥
लक्ष्मीः सिद्धिगणाश्च पादुकमुखाःसिद्धास्तथा वैरिणां
स्तम्भश्चापि वराङ्गने गजघटास्तम्भस्तथा मोहनम् ॥
मातस्त्वत्पदसेवया खलु नृणां सिध्यन्ति ते ते गुणाः ।
क्लांतः कांतमनोभवस्य भवति क्षुद्रोऽपि वाचस्पतिः ॥
ताराष्टकमिदं पुण्यं भक्तिमान् यः पठेन्नरः ।
प्रातर्मध्याह्नकाले च सायाह्ने नियतः शुचिः ॥
लभते कवितां विद्यां सर्वशास्त्रार्थविद् भवेत् ।
लक्ष्मीमनश्वरां प्राप्य भुक्त्वा भोगान् यथेप्सितान् ॥
कीर्तिं कान्तिं च नैरुज्यं प्राप्यान्ते मोक्षमाप्नुयात् ॥

इति नीलतन्त्रे श्रीताराष्टकं स्तोत्रं समाप्तम् ॥

# इच्छापूरिणी स्तोत्रम्

इच्छापूरिणि मातः सर्वं पूरय ममाभीष्टम् ।
त्वन्नामान्वर्थतया त्वयि प्रतीतिर्यथा मे स्यात् ॥१॥
करुणापारावारस्तव नयनेकोऽपि लसतितराम् ।
यद्वीक्षणकणिकासः स्पृष्टो लभते जनः श्रेयः ॥२॥
अयि करुणामयि मय्यपि सा संख्या हृदयमाधेया
गण्यन्ते त्वत्करुणावर्द्धितविभवा यथा लोके ॥३॥
मातस्त्वमस्यनन्तानन्तं विभवं प्रयच्छ मह्यमपि ।
येन मदीयं दैन्यं दूरतरं स्याद्यथा शीघ्रम् ॥४॥
भवतीव्रतापदलने भवती वृतमद्य यद्धृत्ते ।
दुःखध्वस्तमनस्त्वाच्छरणं करवाणि तव चरणौ ॥५॥
जनि प्रतीतिरन्तरमध्यास्ते मम सदा भवती ।
स्खलितत्वत्पदपूजो गच्छन् गेहं बलाद्रुद्धः ।६॥
त्वमसि निखिलजनजननी सुतसामान्यं वितरमे स्नेहम्
कल्याणकल्पलतिके गतिस्त्वमेका ममासि भुवि ॥७॥
अर्चार्पितमालायां ग्रथितान्यभिलाषकुसुमानि ।
फलन्त्वनुग्रहस्तव किमतः परमन्य कथयानि ॥८॥
दैन्यग्राहाक्रान्तो दारिद्र्याब्धौ निमज्जमानोऽस्मि ।
कृष्णन्ती त्वं द्राक्तर मुद्धर मां मा कुरु बिलम्बम्॥६
नवभिः कुसुमैर्ग्रथिता समर्पिता तव चरणयुगले ।
अपनयतु ममाभावं सकलं शीघ्रं विभवपुञ्जैः ॥१०

# ॥ श्रीबगलाराधना ॥

ध्यानानि

(१) पीताम्बरालंकृतपीतवर्णां,

सप्तोदरीं सर्वमुखामरार्चिताम् ।

पीताम्बरालंकृतपीतपुष्पां,

स्मरे सदाहं बगलामुखीं हृदि ॥

(२) कौलागमैकसंवेद्यां सदा कौलावलम्बिकाम्,

भजेऽहंसर्वसिद्ध्यर्थं बगलां चिन्मयीं हृदि ॥

(३) पीतवर्णां मदाघूर्णां दृढपीनपयोधराम् ॥

वन्देऽहं बगलां देवीं स्तम्भनास्त्रस्वरूपिणीम् ॥

(४) नमस्ते बगलां देवीं जिह्वास्तम्भनकारिणीम् ॥

भजेऽहं शत्रुनाशार्थं मदिरासक्तमानसाम् ॥

(५) अम्बां पीताम्बराढ्यामरुणकुसुम

गन्धानुलेपां त्रिनेत्राम्

गंभीरां कम्बुकण्ठीं कठिनकुचयुगां

चारुबिम्बाधरोष्ठीम्

शत्रोर्जिह्वां च खड्गं शरधनुसहितां
व्यक्तगर्वाधिरूढां
देवीं तां स्तम्भरूपां हृदि परिवसनामम्बिकां
संस्मरामि ॥

(७) योषिदाकर्षणे शक्तां फुल्लचम्पकसन्निभाम् ।
दुष्टसंस्तम्भना सक्तां बगलां स्तम्भिनीं भजे ॥

मन्त्रः —

ओं ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ओं स्वाहा ।

# १—कवचम्

भैरव्युवाच—

श्रुत्वा च बगलापूजां स्त्रोत्रं चापि महेश्वर ।
इदानीं श्रोतुमिच्छामि कवचं वद मे प्रभो ॥
वैरिनाशकरं दिव्यं सर्वाशुभविनाशनम् ।
शुभदं स्मरणात्पुण्यं त्राहि मां दुःखनाशन ॥

श्रीभैरव उवाच—

कवचं शृणु वक्ष्यामि भैरवि प्राणवल्लभे ।
पठित्वा धारयित्वा च त्रैलोक्ये विजयी भवेत् ॥

ॐ अस्य श्रीबगलामुखीकवचस्य नारदऋषिः अनुष्टुप् छन्दः श्रीबगलामुखी देवता लं बीजं ईं शक्तिः ऐं कीलकम् पुरुषार्थचतुष्टयप्राप्तये जपे विनियोगः ।

शिरो मे बगला पातु हृदयैकाक्षरी परा ।
ॐ ह्लीं ॐ मे ललाटे च बगला वैरिनाशिनी ॥
गदाहस्ता सदा पातु मुखं मे मोक्षदायिनी ।
वैरिजिह्वाधरा पातु कण्ठं मे बगलामुखी ॥

उदरं नाभिदेशं च पातु नित्यं परात्परा ।
परात्परतरा पातु मम गुह्यं सुरेश्वरी ॥
हस्तौ चैव तथा पादौ पार्वती परिपातु मे ।
विवादे विषमे घोरे संग्रामे रिपुसङ्कटे ॥
पीताम्बरधरा पातु सर्वाङ्गं शिवनर्त्तकी ।
श्रीविद्या समयां पातु मातङ्गी पूजिता शिवा ॥
पातु पुत्रं सुतां चैव कलत्रं कालिका मम ।
भ्रातरं पातु नित्यं मे पितरं शूलिनी सदा ॥
रन्ध्रे हि बगलादेव्याः कवचं मन्मुखोदितम् ।
नैव देयममुख्याय सर्वसिद्धिप्रदायकम् ॥
पठनाद्‌ धारणादस्य पूजनाद्‌ वाञ्छितं लभेत् ।
इदं कवचमज्ञात्वा यो जपेद्‌ बगलामुखीम् ॥
पिबन्ति शोणितं तस्य योगिन्यः प्राप्य सादराः
वश्ये चाकर्षणे चैव मारणे मोहने तथा ॥
महाभये विपत्तौ च पठेद्‌ वा पाठयेत्तु यः ।
तस्य सर्वार्थसिद्धिः स्याद्‌ भक्तियुक्तस्य पार्वति ॥
॥ इति श्रीरुद्रयामले श्रीबगलामुखीकवचम् सम्पूर्णम् ॥

## २—"अथ कवचम्"

कैलासाचलमध्यगं पुरवहं

शान्तं त्रिनेत्रं शिवम्,

वामस्था कवचं प्रणम्य गिरिजा

भूतिप्रदं पृच्छति।

देवी श्रीबगलामुखी रिपुकुला-

रण्याग्निरूपा च या,

तस्याश्चापविमुक्तमन्त्रसहितं

प्रीत्याधुना ब्रूहि माम् ॥१॥

श्रीशङ्कर उवाच—

देवि श्रीभववल्लभे शृणु महामन्त्रं

विभूतिप्रदम्।

देव्या वर्मयुतं समस्तसुखदं,

साम्राज्यदं मुक्तिदम् ॥

तारंरुद्रवधूविरञ्चिमहिला-
विष्णुप्रिया कामयुक्,
कान्ते श्रीबगलानने मम रिपुं
नाशाय युग्मंत्विति ॥२॥
ऐश्वर्याणि पदं च देहि युगलं
शीघ्रं मनोवाञ्छितम् ,
कार्यं साधय युग्मयुक्शिववधू-
र्वह्निप्रियान्तो मनुः ॥
कंसारेस्तनयं च बीजमपरा
शक्तिश्च वाणी तथा ।
कीलं श्रीमति भैरवर्षिसहितं
छन्दोविराट्संयुतम् ॥३॥
स्वेष्टार्थस्य परस्य वेति नितरां
कार्यस्य संप्राप्तये ।
नानाऽसाध्य महामदस्य नियतं
नाशाय वीर्याप्तये ॥

ध्यात्वा श्रीबगलाननां मनुवरं
जप्त्वा सहस्राख्यकम् ।
दीर्घैः षट्कयुतैश्च रुद्रमहिता
वीजैं विनश्याङ्कगे ॥४॥

ध्यानम्—

सौवर्णासनसंस्थितां त्रिनयनां
पीतांशुकोल्लासिनीम् ।
हेमाभाङ्गरुचिं शशाङ्कमुकुटां
सच्चम्पकस्रग्युताम् ॥
हस्तैर्मुद्गरपाशवज्ररसनां
संबिभ्रतीं भूषण-
व्याप्ताङ्गीं बगलामुखीं त्रिजगतां
संस्तम्भिनीं चिन्तये ॥५॥

ॐ अस्य श्रीबगलामुखीब्रह्मास्त्रमन्त्र कवचस्य भैरव-ऋषि विराट् छन्दः श्रीबगलामुखी देवता, क्लीं बीजम्, ऐं शक्तिः, श्रीं कीलकं मम परस्य च मनोऽभिलषितेष्ट कार्यसिद्धये विनियोगः ॥

शिरसि भैरवऋषये नमः, मुखे विराट्छन्दसे नमः, हृदि बगलामुखीदेवतायै नमः, गुह्ये क्लीं बीजाय नमः, पादयोः ऐं शक्तये नमः, सर्वाङ्गे श्रीं कीलकाय नमः ॥ ओं ह्रां अङ्गुष्ठाभ्यां नमः, ओं ह्रीं तर्जनीभ्यां नमः, ओं ह्रूं मध्यमाभ्यां नमः, ओं ह्रैं अनामिकाभ्यां नमः, ओं ह्रौं कनिष्टकाभ्यां नमः, ओं ह्रः करतलकरपृष्ठाभ्यां नमः ॥ ओं ह्रां हृदयाय नमः, ओं ह्रीं शिरसे स्वाहा, ओं ह्रूं शिखायै वषट्, ओं ह्रैं कवचाय हुम्, ओं ह्रौं नेत्रत्रयाय वौषट्, ओं ह्रः अस्त्राय फट् ॥

मन्त्रोद्धार :—

ओं ह्रीं ऐं श्रीं क्लीं श्रीबगलानने मम रिपून् नाशय नाशय ममैश्वर्याणि देहि देहि शीघ्रं मनोवाञ्छितं कार्यं साधय साधय ह्रीं स्वाहा ॥

शिरो मे पातु ओं ह्रीं ऐं श्रीं क्लीं
पातु ललाटकम् ॥
सम्बोधनपदं पातु नेत्रे श्रीबगलानने ॥१॥
श्रुतौ मम रिपुं पातु नासिकां नाशय द्वयम् ॥

पातु गण्डौ सदा मामैश्वर्याण्यन्तन्तु मस्तकम् ॥

देहि द्वन्द्वं सदा जिह्वां पातु शीघ्रं वचो मम ॥

कण्ठदेशं स नः पातु वाञ्छितं बाहुमूलकम् ॥

कार्यं साधय द्वन्द्वं तु करौ पातु सदा मम ॥

मायायुक्ता तथा स्वाहा हृदयं पातु सर्व्वदा ॥

अष्टाधिकचत्वारिंशदण्डाढ्या बगलामुखी ॥

रक्षां करोतु सर्वत्र गृहेऽरण्ये सदा मम ॥

ब्रह्मास्त्राख्यो मनुः पातु सर्वाङ्गं सर्वसन्धिषु ।

मन्त्रराजः सदा रक्षाङ्करोतु मम सर्वदा ॥

ओं ह्लीं पातु नाभिदेशं कटिं मे बगलावतु ।

मुखीवर्णद्वयं पातु लिङ्गं मे मुष्कयुग्मकम् ॥

जानुनी सर्वदुष्टानां पातु मे वर्णपञ्चकम् ॥

वाचं मुखं तथा पादं षड्वर्णा परमेश्वरी ॥

जङ्घायुग्मं सदापातु बगला रिपुमोहिनी ।

स्तम्भयेति पदं पृष्ठं पातु वर्णत्रयं मम ॥

जिह्वां वर्णद्वयं पातु गुल्फौ मे कीलयेति च ।
पादोर्द्ध्वं सर्वदा पातु बुद्धिं पादतले मम ॥
विनाशय पदं पातु पदाङ्गुल्योर्नखानि मे ।
ह्रीं बीजं सर्वदा पातु बुद्धीन्द्रियवचांसि मे ॥
सर्वाङ्गं प्रणवः पातु स्वाहा रोमाणि मेऽवतु ।
ब्राह्मी पूर्वदले पातु चाग्नेय्यां विष्णुवल्लभा ॥
माहेशी दक्षिणे पातु चामुण्डा राक्षसेऽवतु ।
कौमारी पश्चिमे पातु वायव्ये चापराजिता ॥
वाराही चोत्तरे पातु नारसिंही शिवेऽवतु ।
ऊर्द्ध्वं पातु महालक्ष्मीः पाताले शरदाऽवतु ॥
इत्यष्टौ शक्तयःपातु सायुधाश्च सवाहनाः ।
राजद्वारे महादुर्गे पातु मां गणनायकः ॥
श्मशाने जलमध्ये च भैरवश्च सदाऽवतु ।
द्विभुजा रक्तवसनाः सर्वाभरणभूषिताः ॥
योगिन्यः सर्वदा पान्तु महारण्ये सदा मम ।
इति ते कथितं देवि कवचं परमाद्भुतम् ॥

श्री विश्वविजयं नाम कीर्तिश्रीविजयप्रदम् ।
अपुत्रो लभते पुत्रं धीरं शूरं शतायुषम् ॥
निर्धनो धनमाप्नोति कवचस्यास्यपाठतः ।
जपित्वा मन्त्रराजं तु ध्यात्वा श्रीबगलामुखीम्
पठेदिदं तु कवचं निशायां नियमात्तु यः ।
यद्यत् कामयते कामं साध्यासाध्यंमहीतले ॥
तत्तत्काममवाप्नोति सप्तरात्रेण शङ्करि ।
गुरुं ध्यात्वा सुरां पीत्वा रात्रौ शक्तिसमन्वितः
कवचं यः पठेद्द देवि तस्या साध्यं न किञ्चन ।
यं ध्यात्वा प्रजपेन् मन्त्रं सहस्रं कवचं पठेत् ॥
त्रिरात्रेण वशं याति मृत्युं तन्नात्र संशयः ।
लिखित्वा प्रतिमां शत्रोः सतालेन हरिद्रया ॥
लिखित्वा हृदितन्नाम तन्ध्यात्वा प्रजपेन्मनुम्
एकविंशदिनं यावत् प्रत्यहं च सहस्रकम् ॥
जप्त्वा पठेत्तु कवचं चतुर्विंशतिवारकम् ।
संस्तम्भं जायते शत्रोर्नात्रकार्याविचारणा ॥

विवादे विजयं तस्य संग्रामे जयमाप्नुयात् ।
श्मशाने च भयं नास्ति कवचस्य प्रभावतः ॥
नवनीतञ्चाभिमन्त्र्य स्त्रीणां दद्यान्महेश्वरि ।
बन्ध्यायां जायते पुत्रो विद्याबलसमन्वितः ॥
श्मशानाङ्गारमादाय भौमे रात्रौ शनावथ ।
पादोदकेन स्पृष्ट्वा च लिखेल्लोहशलाकया ॥
भूमौ शत्रोः स्वरूपं च हृदि नाम समालिखेत् ।
हस्तं तद्धृदये दत्त्वा कवचं तिथिवारकम् ॥
ध्यात्वा जपेन्मन्त्रराजं नवरात्रं प्रयत्नतः ।
म्रियते ज्वरदाहेन दशमेऽह्नि न संशयः ॥
भूर्जपत्रेष्विदं स्तोत्रमष्टगन्धेन संलिखेत् ।
धारयेद्दक्षिणे वाहौ नारी बामभुजे तथा ॥
संग्रामे जयमाप्नोति नारी पुत्रवती भवेत् ।
ब्रह्मास्त्रादीनि शस्त्राणि नैव कृन्तन्ति तं जनम्
संपूज्य कवचं नित्यं पूजायाः फलमालभेत् ।
वृहस्पतिसमो वापि विभवे धनदोपमः ॥

कामतुल्यश्च नारीणां शत्रूणां च यमोपमः ।
कबितालहरी तस्य भवेद्ग गङ्गाप्रवाहवत् ॥
गद्यपद्यमयी वाणी भवेद्ग देवीप्रसादतः ।
एकादशशतं यावत् पुरश्चरणमुच्यते ॥
पुरश्चर्याविहीनं तु न चेदं फलदायकम् ।
न देयं परशिष्येभ्यो दुष्टेभ्यश्च विशेषतः ॥
देयं शिष्याय भक्ताय पञ्चत्वञ्चान्यथाप्नुयात् ।
इदं कवचमज्ञात्वा यो भजेद्बगलामुखीम् ॥
शतकोटि जपित्वा तु तस्य सिद्धिर्न जायते ।
दाराढ्यो मनुजोऽस्य लक्षजपतः
प्राप्नोति सिद्धिं पराम् ॥
विद्यां श्रीविजयन्तथा सुनियतं
धारञ्च वीरं परम् ॥
ब्रह्मास्त्रख्यमनु विलिख्य नितरां
भुर्जेऽष्टगन्धेन वै ॥
धृत्वा राजपुरं ब्रजन्ति खलु मे
दासोऽस्ति तेषां नृपः ॥

इतिविश्वेश्वरोद्धारतन्त्रे पार्वतासंवादे
बगलामुखीकबचं सम्पूर्ण ॥

# "श्री बगलामुखी स्तोत्र"

ॐ अस्य श्रीबगलामुखीस्तोत्रस्य भगवान् नारद ऋषिः श्रीबगलामुखीदेवता त्रिष्टुपूछन्दः मम संनिहितानामसंनिहितानां विरोधिनां दुष्टानां वाङ्मुखबुद्धीनां स्तम्भनार्थे श्रीमहामायाबगलामुखीवरप्रसादसिद्ध्यर्थे जपे विनियोगः।

ॐ ह्लीं अंगुष्ठाभ्यां नमः, ॐ बगलामुखि तर्जनीभ्यां स्वाहा, ॐ सर्वदुष्टानां मध्यमाभ्यां वषट्, ॐ वाचं मुखं पदं स्तम्भय अनामिकाभ्यां हुम्, ॐ जिह्वां कीलय कनिष्ठिकाभ्यां वौषट्, ओं बुद्धिं विनाशय ह्लीं ओं स्वाहा करतल करपृष्ठाभ्यां नमः। एवं हृदयादिषु। ध्यानम्—

सौवर्णासनसंस्थितां त्रिनयनां
पीतांशुकोल्लसिनीं,
हेमाभाङ्गरुचिं शशाङ्कमुकुटां
सच्चम्पकस्रग्युताम्।

हस्तैर्मुद्गरपाशवज्ररसनां

संबिभ्रतीं भूषणै—

र्व्याप्ताङ्गीं बगलामुखीं त्रिजगतां

संस्तम्भिनीं चिन्तये ॥

जपमन्त्र-ओं ह्ली‌ं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्ली‌ं ओं स्वाहा

मध्ये सुधाब्धिमणिमण्डपरत्नवेद्यां,

सिंहासनोपरिगतां परिपीतवर्णाम् ।

पीताम्बराभरणमाल्यविभूषितांगीं,

देवीं भजामि धृतमुद्गरवैरिजिह्वाम् ॥

जिह्वाग्रमादाय करेण देवीं,

वामेन शत्रून् परिपीडयन्तीम् ।

गदाभिघातेन च दक्षिणेन,

पीताम्बराढ्यां द्विभुजां नमामि ॥

त्रिशूलधारिणीमम्बां, सर्वसौभाग्यदायिनीम् ।

सर्वशृङ्गारवेषाढ्यां, देवीं ध्यात्वा प्रपूजयेत् ॥

पीतवस्त्रां त्रिनेत्रां च, द्विभुजां हाटकोज्ज्वलाम्।
शिलापर्वतहस्तां च. संस्मरेत्सर्वसौख्यदाम् ॥
रिपुजिह्वाग्रहां देवीं, पीतपुष्पविभूषिताम् ।
वैरिनिर्दलनार्थाय, स्मरेत्तां बगलामुखीम् ॥
गम्भीरां च मदोन्मत्तां, स्वर्णकान्तिसमप्रभाम् ।
चर्तुभुजां त्रिनयनां, कमलासनसंस्थिताम् ।।
मुद्गरं दक्षिणे पाशं, बामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्रदृढपीनपयोधराम् ॥
हेमकुण्डलभूषां च, पीतचन्द्रार्धशेखराम् ।
पीतभूषणपीतांगीं, स्वर्णसिंहासने स्थिताम् ॥
एवं ध्यात्वा जपेत् स्त्रोत्रमेकाग्रकृतमानसः ।
सर्वसिद्धिमवाप्नोति, मन्त्रध्यानपुरःसरम् ॥
आराध्ये जगदम्ब दिव्यकविभिः
सामाजिकैः स्तोतृभिः ।
माल्यैश्चन्दनकुंकुमैः, परिमलैरभ्यर्चिते
सादरात् ॥

सम्यङ्न्यासिसमस्तभूतनिवहे,

सौभाग्यशोभाप्रदे ।

श्रीमुग्धे बगले प्रसीद विमले,

दुःखापहे पाहि माम् ॥

आनन्दकारिणी देवी, रिपुस्तम्भनकारिणी ।

मदनोन्मादिनी चैव, प्रीतिस्तम्भनकारिणी ॥

महाविद्या महामाया, साधकस्य फलप्रदा ।

यस्याः स्मरणमात्रेण, त्रैलोक्यं

स्तम्भयेत् क्षणात् ॥

वामे पाशांकुशौ जिह्वां,

तस्याधस्तात् वरं शुभम् ।

दक्षिणे क्रमतो वज्रं, गदाशक्त्यभयानि च ॥

बिभ्रतीं संस्मरेन्नित्यं, पीतमाल्यानुलेपनाम् ।

पीताम्बरधरां देवीं, ब्रह्मादिसुरवन्दिताम् ॥

केयूरांगदकुण्डलभूषां,

बालार्कद्युतिरञ्जितवेषाम् ।

तरुणादित्यसमानप्रतिमां,
कौशेयांशुकबद्धनितम्बाम् ॥

कल्पद्रुमतलनिहितशिलायां,
प्रमुदितचित्तोल्लसदलकान्ताम् ।

पञ्चप्रेतनिकेतनबद्धां,
भक्तजनेभ्यो वितरणशीलाम् ॥

एवं विधां तां बगलां, ध्यात्वा मनसि साधकः ।
सर्वसम्पत्समृद्ध्यर्थं, स्तोत्रमेतदुदीरयेत् ॥

चलत्कनककुण्डलोल्लसितचारुगण्डस्थलां,
लसत्कनकचम्पकद्युतिमदिन्दुबिम्बाननाम् ।
गदाहतबिपक्षकां कलितलोलजिह्वां चलां,
स्मरामि बगलामुखीं बिमुखवाङ्मुखस्तम्भिनीम्
पीयूषोदधिमध्यचारुबिलसद्रत्नोज्ज्वले मण्डपे,
तत्सिंहासनमूलपातितरिपुं,
प्रेतासनाध्यासिनीम् ।

स्वर्णाभां करपीडितारिरसनां
भ्राम्यद्गदाविभ्रमां,
यस्त्वां ध्यायति यान्ति तस्य
विलयं सद्योऽथ सर्वापदः ।।
देवि त्वच्चरणाम्बुजार्चनकृते
यः पीतपुष्पाञ्जलिं,
मुद्रां वामकरे निधाय च
पुनर्मन्त्री मनोज्ञाक्षरम् ।
पीतध्यानपरोऽथ कुम्भकवशाद्
बीजं स्मरेत् पार्थिव-
स्तस्यामित्रमुखस्य वाचि हृदये
जाड्यं भवेत् तत्क्षणात् ॥
मन्त्रस्तावदलं विपक्षदलने
स्तोत्रं पवित्रं च ते,
यन्त्रं वादिनियन्त्रणे त्रिजगतां
जैत्रं न चित्रं हि तत् ।

मातः श्रीबगलेति नाम ललितं
यस्यास्ति जन्तोर्मुखे,
त्वन्नामस्मरणेन संसदि मुखस्तम्भो
भवेद्व वादिनाम् ॥
वादी मूकति रङ्कति
क्षितिपतिर्वैश्वानरः शीतति,
क्रोधी शाम्यति दुर्जनः सुजनति
क्षिप्रानुगः खञ्जति ।
गर्वी खर्वति सर्वविच्च जडति
त्वद्यन्त्रणायन्त्रितः,
श्री नित्ये बगलामुखि प्रतिदिनं
कल्याणि तुभ्यं नमः ॥
दुष्टस्तम्भनमुग्रविघ्नशमनं दारिद्र्यविद्रावणं,
भूभृत्संनमनं चलन्मृगदृशां चेतः समाकर्षणम्,
सौभाग्यैकनिकेतनं समदृशोः कारुण्यपूर्णेक्षणे,
शत्रोर्मारणमाविरस्तु पुरतो मातस्त्वदीयं वपुः ॥

मातर्भञ्जय मद्विपक्षवदनं
जिह्वां च संकीलय,
ब्राह्मीं यन्त्रय मुद्रयाशु धिषणामुग्रां
गतिं स्तम्भय।
शत्रूंश्चूर्णय चूर्णयाशु गदया
गौराङ्गि पीताम्बरे,
विघ्नौघं बगले हर प्रणमतां
कारुण्यपूर्णेक्षणे॥
मातर्भैरवि भद्रकालि विजये,
बाराहि विश्वाश्रये,
श्रीविद्ये समये महेशि बगले,
कामेशि बामे रमे॥
मातंगि त्रिपुरे परात्परतरे
स्वर्गापवर्गप्रदे,
दासोऽहं शरणागतोऽस्मि कृपया
विश्वेश्वरि त्राहि माम्॥

त्वं विद्या परमा त्रिलोकजननी,
विघ्नौघविध्वंसिनी ।
कोषाकर्षण कारिणी
त्रिजगतामानन्दसंवर्द्धिनी ।
दुष्टोच्चाटनकारिणी पशुमनः-
सम्मोहसंदायिनी,
जिह्वाः कीलय वैरिणां विजयसे
ब्रह्मास्त्रविद्या परा ॥
मातर्यस्तु मनोरमं स्तवमिमं देव्याः
पठेत् सादरं,
धृत्वा यन्त्रमिदं तथैव समरे
बाह्वोः करे वा गले,
राजानो वरयोषितोऽथ करिणः
सर्पा मृगेन्द्राः खला—
स्ते वै यान्ति विमोहिता रिपुगणा
लक्ष्मीः स्थिरा सर्वदा ॥

अनुदिनमभिरामं साधको यस्त्रिकालं,
पठति स भुवनेस्मिन् पूज्यते देववर्गैः ।
सकलममलकृत्यं तत्त्वद्रष्टा च लोके,
भवति परमसिद्धा लोकमाता पराम्बा ॥

पीतवस्त्रवसनामरिदेहप्रेत-
जासननिवेशितदेहां,
फुल्लपुष्परविलोचनरम्यां
दैत्यजालदहनोज्ज्वलभूषाम् ॥

पर्यङ्कोपरि लसद्द्विभुजां तां,
कम्बुहेमनतकुण्डललोलाम् ।
बैरिनिर्दलनकारणरोषां, चिन्तयामि
बगलां हृदयाब्जे ॥

चिन्तयामि सुभुजां शृणिहस्तां
सद्भुजां सुरबन्दिचरणां ।
षष्ठिसप्ततिशतैर्धृतशस्त्रैर्बाहुभिः
परिवृतां बगलाम्बाम् ॥

चौराणां संकटे च प्रहरणसमये
बन्धने वारिमध्ये.
वह्नौ वादे विवादे प्रकुपितनृपतौ
दिव्यकाले निशायाम् ।
वश्ये वा स्तभने वा रिपुवधसमये
प्राणबाधे रणे वा,
गच्छँस्तिष्ठँस्त्रिकाले यदि पठति
शिवं प्राप्नुयादाशु धीरः ॥
विद्या लक्ष्मीः सर्वसौभाग्यमायुः
पुत्रान्सम्पद्राज्यमिष्टं च सिद्धिः॥
मातः श्रेयः सर्ववश्यत्वसिद्धिः प्राप्तं
सर्वं भूतले त्वत्परेण ॥
गेहन्नाकति गर्वितः प्रणमति
स्त्रीसंगमी मोक्षति,
द्वेषी मित्रति पातकी सुकृतति
क्ष्मावल्लभो दासति ।

मृत्युर्वैद्यति दूषणं गुणति वै
त्वत्पादसंसेवनात्,
तां वन्दे भवभीतिभञ्जनकरीं
गौरीं गिरीशप्रियाम् ॥

यत्कृतं जपसन्ध्यानं चिन्तनं परमेश्वरि।
शत्रूणां स्तम्भनार्थाय तद्गृहाण नमोऽस्तु ते॥
ब्रह्मास्त्रमेतद् विख्यातं त्रिषु लोकेषु दुर्लभम्।
गुरुभक्ताय दातव्यं न देयं यस्य कस्यचित्॥
पीताम्बरां च द्विभुजां त्रिनेत्रां गात्रकोज्ज्वलाम्
शिलामुद्गरहस्तां च स्मरेत्तां बगलामुखीम्॥

सिद्धिं साध्येऽवगन्तुं गुरुवर-
वचनेष्वार्हविश्वासभाजां,
स्वान्तः पद्मासनस्थां वररुचिबगलां
ध्यायतां तारताराम्।

गायत्रीपूतवाचां हरिहरमनने
तत्पराणां नराणां,
प्रातर्मध्याह्नकाले स्तवपठनमिदं
कार्यसिद्धिप्रदं स्यात्॥

॥ इति श्रीब्रह्मास्त्रमहाविद्यास्तोत्रम् ॥

# "अथ हृदयम्"

ॐ अस्य श्रीबगलामुखी हृदयस्य नारदऋषिः अनुष्टुप्छन्दः श्रीबगलामुखी देवता ह्लीं बीजम् , क्लीं शक्तिः ऐं कीलकम् श्रीबगलामुखीप्रसाद सिद्ध्यर्थे जपे विनियोगः ।

अथ न्यासः ॥ नारदऋषये नमः शिरसि, अनुष्टुप्छन्द से नमो मुखे, ॐ श्री बगलामुख्यै देवतायै नमो हृदये, ह्लीं बीजाय नमो गुह्ये, क्लीं शक्तये नमः, पादयोः ऐं कीलकाय नमः सर्वाङ्गे ॥ अथ कराङ्गन्यासौ ॥ ॐ ह्लीं अङ्गुष्ठाभ्यां नमः, ओं क्लीं तर्जनीभ्यां नमः, ओं ऐं मध्यमाभ्यां नमः, ओं ह्लीं अनामिकाभ्यां नमः, ओं क्लीं कनिष्टकाभ्यां नमः, ओं ऐं करतलकरपृष्ठाभ्यां नमः॥ ओं ह्लीं हृदयाय नमः, ओं क्लीं शिरसे स्वाहा, ओं ऐं शिखायै वषट्, ओं ह्लीं कवचाय हुम्, ओं क्लीं नेत्रत्रयाय वौषट्, ओं ऐं अस्त्राय फट् ॥ ओं ह्लीं क्लीं ऐं इति दिग्बन्धः ॥

पीताम्बरां पीतमाल्यां पीताभरणभूषिताम् ॥
पीतकञ्जपदद्वन्द्वां बगलां चिन्तयेऽनिशम् ॥

इति ध्यात्वा संपूज्य—

पीतशङ्खगदाहस्ते पीतचन्दनचर्चिते ॥
बगले मे वरं देहि शत्रुसङ्घविदारिणि ॥

इति संप्रार्थ्य—

ओं ह्ल्रीं क्लीं ऐं बगलामुख्यै गदाधारिण्यै प्रेतासनाध्यासिन्यै स्वाहा ॥ इति मन्त्रं जपित्वा पुनः पूर्ववद् हृदयादिषडङ्गन्यासं कृत्वा स्तोत्रं पठेत् । तद् यथा—

वन्देऽहं बगलां देवीं पीतभूषणभूषिताम् ।
तेजोरूपमयीं देवीं पीततेजःस्वरूपिणीम् ॥
गदाभ्रमणाभिन्नाभ्रां भ्रुकुटीभीषणाननाम् ।
भीषयन्तीं भीमशत्रून् भजे भक्तस्य भव्यदाम् ॥
पूर्णचन्द्रसमानास्यां पीतगन्धानुलेपनाम् ।
पीताम्बरपरीधानां पवित्रामाश्रयाम्यम् ॥२॥
पालयन्तीमनुपलं प्रसमीक्ष्यावनीतले ।
पीताचाररतां भक्तां तां भवानीं भजाम्यहम् ॥
पीतपद्मपदद्वन्द्वां चम्पकारण्यरोपिणीम् ।
पीतावतंसां परमां वन्दे पद्मजवन्दिताम् ॥४॥

लसच्चारुसिञ्चत्सुमञ्जीरपादाम् ।
चलत्स्वर्णकर्णावतंसाञ्चितास्याम् ॥
बलत्पीतचन्द्राननांचन्द्रवन्द्यां ।
भजे पङ्कजादीड्यसत्पादपद्मामाम् ॥६॥
सुपीताभया मालया पूतमन्त्रं ।
परन्ते जपन्तो जयं संलभन्ते ॥
रणे रागरोषाप्लुतानां रिपूणां ।
विवादे बलाद्वैरिकुद्धातमातः ॥
स्फुरत्पीतभास्वत्प्रभाहस्कराभां ।
गदागञ्जितामित्रगर्वां गरिष्ठाम् ॥
गरीयोगुणागारगात्रां गुणाढ्यां ।
गणेशादिगम्यां श्रये निर्गुणाढ्याम् ॥८॥
जना ये जपन्त्युग्रवीजं जगत्सु ।
परं प्रत्यहं ते स्मरन्तः स्वरूपम् ॥
भवेद्वादिनां वाङ्मुखस्तभ आद्ये ।
जयो जायते जल्पतामाशु तेषाम् ॥६॥

तव ध्याननिष्ठाप्रतिष्ठात्मप्रज्ञा-
वतां पादपद्मार्थने प्रेमयुक्ताः ॥
प्रसन्ना नृपाः प्राकृताः पण्डिताः वा
पुराणादिगा दासतुल्या भवन्ति ॥१०॥

नमामस्ते मातः कनककमनीयाङ्घ्रि जलजं
वलद्विद्युद्वर्णं घनतिमिरविध्वंसकरणम् ॥
भवाब्धौ मग्नात्मोत्तरणकरणं सर्वशरणम् ।
प्रपन्नानां मातर्जगति बगले दुःखदमनम् ॥११

ज्वलज्ज्योत्स्ना रत्नाकर मणि विषक्ताङ्क्य भवनं
स्मरामस्ते धाम स्मरहर हरीन्द्रेन्दुप्रमुखैः ॥
अहोरात्रं प्रातः प्रणयनवनीयं सुविशदं
वरं पीताकारं परिचितमणिद्वीपवसनम् ॥

पदामस्ते मातः श्रुतिसुखकरं नाम ललितं ।
लसन्मात्रावर्णं जगति बगलेति प्रचरितम् ॥
चलन्तस्तिष्ठन्तो वयमुपविशन्तोऽपि शयने ।
लभामो यच्छ्रेयो दिवि दुरवलभ्यं दिविषदाम् ॥

पदार्चायां प्रीतिः प्रतिदिनमपूर्वा प्रभवतु ।
यथा ते प्रासन्न्यं प्रतिपलमपेक्ष्य प्रणमताम् ।
अनल्पन्तन्मातर्भवति भृतभक्त्या भवतु नो ।
दिशातः सद्भक्तिं भुवि भगवतां भूरिभवदाम् ॥
मम सकल रिपूणां वाङ्मुखे स्तम्भयाशु ।
भगवति रिपुजिह्वां कीलय प्रस्थतुल्याम् ॥
व्यवसितखलबुद्धिं नाशयाशुप्रगल्भां ।
मम कुरु बहुकार्यं सत्कृपेऽम्ब प्रसीद ॥१५॥
व्रजतु मम रिपूणां सद्मनि प्रेतसंस्था ।
करधृतगदया तान् घातयित्वाशु रोषात् ॥
सधनवसनधान्यं सद्म तेषां प्रदह्य ।
पुनरपि बगला स्वस्थानमायातु शीघ्रम् ॥१६
करधृत रिपुजिह्वापीडनव्यग्रहस्तां ।
पुनरपि गदया तांस्ताडयन्तीं सुतन्त्राम् ॥
प्रणतसुरगणानां पालिकां पीतवस्त्रां ।
बहुबलबगलां तां पीतवस्त्रां नमामः ॥१७॥

हृद्यवचनकायैः कुर्वतां भक्तिपुञ्जं ।
प्रकटित करुणार्द्रां प्रीणती जल्पतीति ॥
धनमथ बहुधान्यं पुत्रपौत्रादिवृद्धिः ।
सकलमपि किमेभ्यो देयमेवन्त्ववश्यम् ॥१८॥
तव चरणसरोजं सर्वदा सेव्यमानं ।
द्रुहिणहरिहराद्यै र्देववृन्दैः शरण्यम् ॥
मृदुमपि शरणं ते शर्मदं सूरिसेव्यम् ।
वयमिह करवामो मातरेतद्विधेयम् ॥१९॥
बगलाहृदयं स्तोत्रमिदं भक्तिसमन्वितः ।
पठेद्यो बगला तस्य प्रसन्ना पाठ तो भवेत् ॥
पीतध्यानपरो भक्तो यः शृणोत्यविकल्पतः ।
निष्कल्मषो भवेन्मर्त्यो मृतो मोक्षमवाप्नुयात्
आश्विनस्य सिते पक्षे महाष्टम्यां दिवानिशम्
यस्त्विदं पठ ते प्रेम्णा बगला प्रीति मेतिसः ॥
देव्यालये पठन्मर्त्यो बगलां ध्यायतीश्वरीम् ।
पीतवस्त्रावृतो यस्तु तस्य नश्यन्ति शत्रवः ॥

पीताचाररतो नित्यं पीतभूषां विचिन्तयन् ।
बगलां यः पठेन् नित्यं हृदयस्तोत्रमुत्तमम् ।
न किञ्चिद् दुर्लभं तस्य दृश्यते जगतीतले ॥
शत्रवो हानिमायान्ति तस्य दर्शनमात्रतः ॥

॥ इति सिद्धेश्वरतन्त्र उत्तरखण्डे बगलापटले

बगलाहृदयस्तोत्रं समाप्तम् ॥

# "शतनाम"

नारद उवाच—

भगवन् देवदेवेश सृष्टिस्थितिलयात्मक।
शतमष्टोत्तरं नाम बगलाया बदाधुना ॥१

श्रीभगवानुवाच ॥

श्रृणु वत्स प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम्।
पीताम्बर्या महादेव्याः स्तोत्रं पापप्रशाशनम्
यस्य प्रपठनात्सद्यो वादी मूको भवेत्क्षणात् ॥
रिपूणां स्तम्भनं याति सत्यं सत्यं बदाम्यम् ॥

ॐ अस्य श्रीपीताम्बर्यष्टोत्तरशतनामस्तोत्रस्य श्रीसदाशिव ऋषिरनुष्टुप्छन्दः श्री पीताम्बरी देवता श्रीपीताम्बरीप्रीतये जपे विनियोगः ॥

ओं बगला विष्णुवनिता विष्णुशङ्करभामिनी
बहुला वेदमाता च महाविष्णुप्रसूरपि ॥
महामत्स्या महाकूर्मा महाबाराहरूपिणी।

नरसिंहप्रिया रम्या वामना बटुरूपिणी ॥
जामदग्न्यस्वरूपा च रामा रामप्रपूजिता ।
कृष्णा कपर्दिनी कृत्या कलहा कलकारिणी ॥
बुद्धिरूपा बुद्धभार्या बौद्धपाखण्डखण्डिनी ॥
कल्किरूपा कलिहरा कलिदुर्गार्तिनाशिनी ॥
कोटिसूर्यप्रतीकाशा कोटिकन्दर्पमोहिनी
केवला कठिना काली कलाकैवल्यदायिनी ॥
केशवी केशवाराध्या किशोरी केशवस्तुता ।
रुद्ररूपा रुद्रमूर्त्ती रुद्राणी रुद्रदेवता ॥
नक्षत्ररूपा नक्षत्रा नक्षत्रेशप्रपूजिता ।
नक्षत्रेशप्रिया नित्या नक्षत्रपतिवन्दिता ॥
नागिनी नागजननी नागराजप्रवन्दिता ।
नागेश्वरी नागकन्या नागरी च नगात्मजा ॥
नगाधिराजतनया नगराजप्रपूजिता ।
नवीना नीरदा पीता श्यामा सौन्दर्यकारिणी
रक्ता नीला घना शुभ्रा श्वेतसौभाग्यदायिनी

सुन्दरी सौभगा सौम्या स्वर्णभा स्वर्गतिप्रिया
रिपुत्रासकरी रेखा शत्रुसंहारकारिणी ।
भामिनी च तथा माया स्तम्भिनी मोहिनी शुभा
रागद्वेषकरी रात्री रौरवध्वंसकारिणी ।
यक्षिणी सिद्धिनिवहा सिद्धेशा सिद्धिरूपिणी
लङ्कापतिध्वंसकरी लङ्केशरिपुवन्दिता ।
लङ्कानाथकुलहरा महारावणहारिणी ॥
देवदानवसिद्धौघपूजिता परमेश्वरी ।
परमाणुरूपा परमा परतन्त्रविनाशिनी ॥
वरदा वरदाराध्या वरदानपरायणा ।
वरदेशप्रिया वीरा वीरभूषणभूषिता ॥
वसुदा बहुदा वाणी ब्रह्मरूपा बरानना ।
बलदा पीतवसना पीतभूषणभूषिता ॥
पीतपुष्पप्रिया पीतहारा पीतस्वरूपिणी ।
इति ते कथितं विप्र नाम्नामष्टोत्तरं शतम् ॥
यः पठेत् पाठयेद्वापि श्रृणुयाद्वा समाहितः ॥

तस्य शत्रुः क्षयं सद्यो याति नैवात्र संशयः ॥

प्रभातकाले प्रयतो मनुष्यः

पठेत्तु भक्त्या परिचिन्त्य पीताम् ॥

द्रुतं भवेत्तस्य समस्तवृद्धि

र्विनाशमायाति च तस्य शत्रुः ॥

॥ इति विष्णुयामले नारदविष्णु संवादे श्रीबगलोष्टोत्तर शतनामस्त्रोत्रं सम्पूर्णम् ॥

## "षोडशीसमर्चा"

ध्यानम्—

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ।
पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां भजे ॥

मन्त्रः—ह्रीं क एइल ह्रीं हसकल ह्रीं सकल ह्रीं ॥

स्तोत्रम्—

कल्याणवृष्टिभिरिवामृतपूरिताभि-
र्लक्ष्मीः स्वयंवरणमंगलदीपिकाभिः ॥
सेवाभिरम्ब तव पादसरोजमूले ।
नाकारि किंमनसि भक्तिमतां जनानाम् ॥
एतावदेव जननि स्पृहणीयमास्ते,
त्वद्वन्दनेषु सलिलस्थसरोजनेत्रे ।
सान्निध्य मुद्यदरुणाम्बुजसोदरस्य,
त्वद्विग्रहस्य सुधया परयाप्लुतस्य ॥

ईषत्प्रभावकलुषाः कतिनाम सन्ति,
ब्रह्मादयः प्रतिदिनं प्रलयाभिभूताः ।
एकः स एव जननि स्थिरबुद्धिरास्ते,
यः पादयोस्तव सकृत् प्रणतिं करोति ॥
लब्ध्वा सकृत्त्रिपुरसुन्दरि तावकीनं
कारुण्यकंदलितकान्तिभरं कटाक्षम् ।
कन्दर्पभावसुभगास्त्वयि भक्तिभाजः
संमोहयन्ति तरुणीं भुवनत्रयेऽपि ॥
ह्रींकारमेव तव नाम गृणन्ति ये वा
मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे ।
त्वत्संस्मृतौ यमभटाभिभवं विहाय
दीव्यन्ति नन्दनवने सह लोकपालैः ॥
हन्तुः पुरामधिगलत्परिपूर्णमानः
क्रूरः कथं न भविता गरलस्यवेगः ।
नाश्वसनाय यदि मातरिदं तवार्द्ध-
देहस्य शश्वदमृताप्लुतशीतलस्य ॥

सर्वज्ञतां सदसि वाक्पटुतां प्रसूते
देवि त्वदङ्घ्रि सरसीरुहयोः प्रणामः ।
किञ्च स्फुरन्मुकुटमुज्ज्वलमातपत्रं
द्वे चामरे च महती वसुधां दधाति ॥

कल्पद्रुमैरभिमतप्रतिपादमेषु
कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि मामनाथं
त्वय्येव भक्तिभरितं त्वयि बद्धदृष्टिम् ॥

हन्तेतरेष्वपि निधाय मनांसि चान्ये
भक्तिं वहन्ति किल चापरदैवतेषु ।
त्वामेव देवि मनसाहमनुस्मरामि
त्वामेव नौमि शरणं जननि त्वमेव ॥

लक्षेषु सत्स्वपि तवाक्षिविलोकनाना
मालोकय त्रिपुरसुन्दरि मां कथंचित् ॥
नूनं मया च सदृशं करुणैकपात्रं
जातो जनिष्यति जनो नच जायते वा ॥

ह्रीं ह्रीमिति प्रतिदिनं जपतां तवाख्यां
किं नाम दुर्लभमिह त्रिपुराभिधाने ।
मालाकिरीटमदवारणमाननीयां-
स्तान्सेवते मधुमती स्वमेव लक्ष्मीः ॥
सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानकुशलानि सरोरुहाक्षि ।
त्वद्वन्दनानि दुरितोद्धरणक्षमाणि
मामेव मातरनिशं कलयन्तु नान्यम् ॥
कल्पोपसंहरणकल्पितताण्डवस्य
देवस्य खण्डपरशोः परभैरवस्य ।
पाशाङ्कुशैक्षवशरासनपुष्पबाणा
सा साक्षिणी विजयते तव मूर्तिरेका ॥
लग्नं सदा भवतु मातरिदं त्वदीयं
तेजः परं बहुलकुङ्कुमपङ्कशोणम् ।
भास्वत्करीटममृतांशुकलावतंसं
रूपं त्रिकोणमुदितं परमामृतात्मकम् ॥

ह्रीकारत्रयसंपुटेन महता मन्त्रेण संदीपितं
स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपेन्मन्त्रवित्
तस्य क्षोणिभुजो भजन्ति
वशगा लक्ष्मीश्चिरंस्थायिनी
वाणी निर्मलसूक्तिभावभरिता
जागर्ति दीर्घं यशः ॥

॥ इति ब्रह्मविरचितं षोडशीकल्याणीस्तोत्रं समाप्तम् ॥

# "बाराहीनिग्रहाष्टकम्"

देवि क्रोडमुखि त्वदङ्घ्रि-

कमलद्वन्द्वानुरक्तात्मने

मह्यं द्रुह्यति यो महेशि

मनसा कायेन वाचा नरः ॥

तस्याशु त्वदयोग्रनिष्ठुरहला-

घातप्रभूतव्यथा-

पर्यस्यन्मनसो भवन्तु वपुषः

प्राणाः प्रयाणोन्मुखाः ॥

देवि त्वत्पदपद्मभक्तिविभव-

प्रक्षीणदुष्कर्मणि

प्रादुर्भूतनृशंसभावमलिनां

वृत्तिं विधत्ते मयि ।

यो देही भुवने तदीयहृदया-

न्निर्गत्वरैर्लोहितैः

सद्यः पूरयसे कराब्जचषकं
बाञ्छाफलैर्मामपि ॥
चण्डोत्तुण्डविदीर्णदुष्टहृदय-
प्रोद्भिन्नरक्तच्छटा-
हालापानमदाट्टहासनिनदा
टोपप्रतापोत्कटम् ।
मातर्मत्परिपन्थिनामपहृतैः
प्राणैस्त्वदङ्घ्रिद्वयं
ध्यानोड्डामरवैभवोदयवशात्
सन्तर्पयामि क्षणात् ॥
श्यामां तामरसाननाङ्घ्रिनयनां
सोमार्द्धचूडां जगत्-
त्राणव्यग्रहलायुधाग्रमुसलां
संत्रासमुद्रावतीम् ।
ये त्वां रक्तकपालिनीं हराबरा-
रोहे वरहामानां

भावः सद्धते कथं क्षणमपि
प्राणन्ति तेषां द्विषः ॥
विश्वाधीश्वरवल्लभे विजयते
या त्वं नियन्त्रात्मिका ।
भूतान्ता पुरुषायुषाधिककरी
पाकप्रदा कर्मणाम् ॥
त्वां याचे भवतीं किमप्य वितथं
को मद्विरोधी जन-
स्तस्यायुर्मम वाञ्छितावधि
भवेन्मातस्तवैवाज्ञया ॥
मातः सम्यगुपासितुं जडमतिस्त्वां
नैव शक्नोम्यहम् ।
यद्यप्यन्वितदेशिकाङ्घ्रिकमला-
नुक्रोशपात्रस्य मे ।
जन्तुः कश्चन चिन्तयत्यकुशलं
यस्तस्य तद्वैशसम् ।
भूयाद्देवि विरोधिनो मम च ते
श्रेयः पदासंगिनः ॥

बाराहि व्यथमानमानसगल
त्सौख्यं तदाशाबलिं
सीदन्तं यमपाक्कताध्यवसितं
प्राप्ताखिलोत्पादिकम् ॥
क्रन्दन् बन्धुजनैः कलङ्कितकुलं
कण्ठव्रणोद्यत्कृमिं ।
पश्यामि प्रतिपक्षमाशु पतितं
भ्रान्तं लुठन्तं मुहुः ॥
वाराहि त्वमशेष जन्तुषु पुनः
प्राणात्मिका स्पन्दसे
शक्तिव्याप्तचराचरा खलु
यतस्त्वामेव संप्रार्थये
त्वत्पादाम्बुज संगिनो मम
सकृत् पापं चिकीर्षन्ति ये
तेषां मा कुरु शङ्करप्रियतमे
देहान्तरावस्थितिम् ॥

॥ इति बाराहीं निग्रहाष्टकं समाप्तम् ॥

# अथ सप्तश्लोकी दुर्गा

शिव उवाच—

देवि त्वं भक्तसुलभे सर्वकार्यविधायिनी ।
कलौ हि कार्यसिद्ध्यर्थं सुपात्रं ब्रूहि यत्नतः ॥

देव्युवाच--

शृणु देव प्रवक्ष्यामि कलौ सर्वेष्टसाधनम् ।
मया तवैव स्नेहेनाप्यम्बास्तुतिः प्रकाश्यते ॥

ॐ अस्य श्रीदुर्गासप्तश्लोकीस्तोत्रमन्त्रस्य नारायण ऋषिः, अनुष्टुप् छन्दः, श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः दुर्गाप्रीत्यर्थं सप्तश्लोकी—दुर्गापाठे विनियोगः ।

ॐ ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥
दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ॥

दारिद्र्यदुःखभयहारिणि का त्वदन्या ।
सर्वोपकारकरणाय सदार्द्रचित्ता ॥२॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥
शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तुते ॥
सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तुते ॥
रोगानशेषानपहंसि तुष्टा
रुष्टा तु कामान् सकलानभीष्टान् ॥
त्वामाश्रितानां न विपन्नराणां
त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥६॥
सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ॥
एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥७॥

॥ इति श्रीसप्तश्लोकी दुर्गा सम्पूर्ण ॥

# "अथ दुर्गाद्वात्रिंशन्नाममाला"

दुर्गा दुर्गार्तिशमनी दुर्गापद्विनिवारिणी।
दुर्गमच्छेदिनी दुर्गसाधिनी दुर्गनाशिनी॥
दुर्गतोद्धारिणी दुर्गनिहन्त्री दुर्गमापहा।
दुर्गमज्ञानदा दुर्ग-दैत्यलोक दवानला॥
दुर्गमा दुर्गमालोका दुर्गमात्मस्वरूपिणी।
दुर्गमार्गप्रदा दुर्गमविद्या दुर्गमाश्रिता॥
दुर्गमज्ञानसंस्थाना दुर्गमध्यानभासिणी।
दुर्गमोहा दुर्गमगा दुर्गमार्थस्वरूपिणी॥
दुर्गमासुरसंहन्त्री दुर्गमायुधधारिणी।
दुर्गमाङ्गी दुर्गमता दुर्गम्या दुर्गमेश्वरी॥
दुर्गभीमा दुर्गभामा दुर्गभा दुर्गहारिणी।
नामावलिमिमां यस्तु दुर्गाया मम मानवः॥
पठेत् सर्वभयान्मुक्तो भविष्यति न संशयः॥

॥ ॐ श्रीदुर्गायै नमः॥